ज्ञेय * निष्फलः। ऋग्विधानं विना तस्मादध्येयं यत् प्रयत्नतः। १।
सूक्तमन्त्रार्थकथनं ऋग्विधानमिवैति यः। ऋग्वेदी जायते
तस्य प्रस॰दोद्धृतमानसः। आयुष्यं संपदोमूलं सद्य कल्मष नाशनं
ऋग्विधानमाख्यानं यशःकीर्त्तिकरं परम्। ऋग्विधानेन संयुक्तं
ऋग्वेदं वेत्ति यो द्विज. धर्म्मार्थकाममोक्षाणामाश्रयः स भवेद्ध्रुवं।
वेदेषु प्रथमो वेद आयुर्वेदनिधिः प्रभुः ऋग्विधानसहाभ्यासादतीव
परितुष्यति मधुनाम्नं मनस्तुष्टिदृढ़ज्ञानसमागमं। ऋग्वेदः कुरुते
नित्यमृग्विधानेन तोषितः। ८। ऋग्वेदं वेत्ति यः सम्यगृग्वि-
धानरतः सदा। मनोरथादप्यधिकं भवेत्तस्य समीहितं। कुले
जन्मनि मौले वा प्रयासु सुतमेव वा। ऋग्विधानपरिज्ञानात्
तुष्यन्ति चरितार्थतां। तुष्यन्ति देवताः सर्व्वा ? संपद्यन्ते विभूतयः
दुराधयः प्रशमन्ति नित्यमृग्विधिपाठिनां। ९। ऋचा १५६।
सर्व्वे ऋचाः ७१४।

विवरणम्। शौनककृतं ऋग्विधानं चतुरध्यायम्, विषयश्च ऋग्वेदाध्ययना-
दिफलकथनम्।

---

**No. 32.** ऋग्विधानं। Rigvidhánam. Substance, country-made paper, 9 × 4 inches. Folia, 22. Lines, 10 to 12 in a page. Character, Devanágara. *Date, not mentioned. Appearance, not very old Verse. Correct. Complete.*

Another work on the uses of the Mantras of the Ṛig-Veda Saṁhitá. By Briddha-Saunaka. Although it bears the same title (*Ṛigvidhánam*) *as the codex last noticed, it differs in* many *essential* points from the latter, the style, as also the subject-matter, being entirely different. It may also be noted here that the beginning of this codex is the same as that of Laghu Ṛidvidhána noticed below, while there is only a slight difference in the conclusion.

Beginning. श्रीगणेशाय नमः। निष्कृतिर्नहि वेदानां मन्त्राणां किल दोषतः
मन्त्रदोषनिवृत्त्यर्थं गायत्रीमाश्रयेद्द्विजः। १। गायत्रीमन्त्रमित्यर्थं
गायत्रीमयुतं जपेत्। सर्व्वेषां वेदमन्त्राणां सिद्ध्यर्थं जपकं
जपेत्। ८।

End. प्रस्तापनं चाध्ययनं प्रश्नपूर्व्वं प्रतिपद्य। याजनाध्यापने वादः
षड्विधोवेदविक्रयः। ८१। वेदविक्रयिणद्रव्यं च (यच ?)
क्षोरादुपाज्जितं। चदेय पितृदेवेभ्यः नियाद्य॰ज्जितं धनम्।

**Colophon.** इति ऋग्मैनकोक्तऋग्विधान समाप्तं। श्रीकालि (?) काम परशुरामार्पणमस्तु । छ। ऋग्विधानमिदं पुस्तक शुभं भवतु । छ। श्रीगङ । छ ।

विवरणम्। ऋग्मैनक विरचित ऋग्वेदीयमन्त्रदोषापहारकजपविधायकं ऋग्विधानं नाम पुस्तकमिदम्। पुस्तकस्यास्य प्रथमांशो वक्ष्यमाणऋग्विधान पुस्तकेनैक्यं भजते, नान्यभागः।

---

**No. 33.** ऋग्विधानम्। Rigvidhánam. Substance, country-made paper, 4 × 3 inches. Folia, 3. Lines, 9 in a page. Extent, about 16 ślokas. Character, Devanágara. Date, not mentioned. Appearance, very old, decayed. Verse. Correct. Complete.

This is a part of the Rigvidhána, treating of the worship of Purusha, with a short appendix. Anonymous. As the work is very short, we give below the whole of it :—

**Beginning.** श्रीमीरय । आद्ययावाहयेद्देवमृचा तु पुरुषोत्तमं ।
द्वितीययाऽसनेदद्यात्पाद्यं चैव तृतीयया । १ ।
अर्घ्यं चतुर्थ्या दातव्यं पंचमयाऽऽचमनीयकम् ।
यथास्नानं प्रकुर्म्मिन्न सप्तमा वस्त्रमेव च ॥ २ ॥
यज्ञोपवीतमष्टमा नवमा चानुलेपनं ।
पुष्पं दशमा दातव्यमेकादश्या तु धूपकं ॥ ३ ॥
द्वादश्या दीपकं दद्यात्त्रयोदश्या निवेदनं ।
चतुर्दश्या नमस्कारं पंचदश्या प्रदक्षिणं ॥ ४ ॥
स्नाने वस्त्रे च नैवेद्ये दद्यादाचमनीयकं ।
दक्षिणांतं यथा मन्त्रा षोड़श्या तु प्रदापयेत् ॥ ५ ॥
ततः प्रदक्षिणां कृत्वा जपं कुर्यात् समाहितः ।
यथाशक्ति जपित्वा तु सूक्तं तस्य निवेदयेत् ॥ ६ ॥
स्नात्वा यथोक्तविधिना प्राङ्मुखः शुद्धमानसः ।
प्रथमां विन्यसेद्वामे द्वितीयां दक्षिणे करे ॥ ७ ॥
तृतीयां वामपादे तु चतुर्थीं दक्षिणे न्यसेत् ।
पंचमीं वामजानूनि षष्ठीं वै दक्षिणे न्यसेत् ॥ ८ ॥
सप्तमीं वामकथ्यां अष्टमीं दक्षिणे कटौ ।
नवमीं नाभिदेशे तु दशमीं हृदये न्यसेत् ॥ ९ ॥
एकादशीं कण्ठदेशे द्वादशीं वामपादके ।
त्रयोदशीं दक्षिणे च आस्ये चैव चतुर्दशीं ॥ १ ॥

**No. 35.** विकृति वल्ली ( विकृतिकौमुदी सहिता ) । Vikriti Valli (with its commentary Vikriti Kaumudi). Substance, country-made paper, 10 × 14 inches. Folia, 13. Lines, 11 on a page. Extent, letters 42 in a line. Character, Devanágara. Date, not mentioned. Appearance, very old, torn, worm-eaten, and writing effaced in parts. Generally correct. Incomplete (only a portion of the whole work).

There are two chief modes of reciting the hymns of the Rigveda, one of which is called Prakriti, in which the Mantras are recited as they stand in the original text, and the other is called Vikriti, in which the manner of reciting the Mantras is somewhat unusual. Of these modes, the latter is of eight kinds, viz. the Jatá, Málá, Sikhá, Lekhá, Dhwaja, Danda, Ratha, and Ghana.

The Vikriti Valli is a work treating of these eight varieties of recitation written by an ancient author named Vyádi, and the Vikriti Kaumudi is a commentary on Vyádi's work, by one Gangádhara Bhattácharya, who appears from his title to have been a Bengali pandit.

The codex under notice contains only a portion of these two works, treating only of the Jatá.

**Beginning.** श्रीगणेशाय नमः । ॐ क्रमे यथोक्ते पदजातमेव द्विरभ्यसेदुत्तरमेव सर्व्वं (पूर्व्वं?) । अभ्यासे पूर्व्वञ्च तथोत्तरे पदेऽवसानमेव हि जटाभिधीयते । क्रमे यथोक्ते क्रमोद्दाभागमित्याद्युक्तक्रमप्रकारे पदजातं पदद्वयं पदक्रमं वा द्विरभ्यसेत् द्विवारं पठेत् । अभ्यासप्रकारमाह उत्तरमेव पूर्व्वं क्रमवत् पदद्वयं गृहीत्वा पूर्व्वं प्रथमं उत्तरपदमभ्यस्य ततः सन्धानद्वारा पूर्व्वं पदमभ्यस्योत्तर पदेऽभ्यसेत्, एवं प्रकारेण यदध्ययनं तज्जटाभिधीयते ।

**End.** अमीद मीद मभ्य १ मी २ दं । इत्याद्युदाहरणानि स्वयमेवोह्यानि ।

**Colophon.** इति श्रीगङ्गाधरभट्टाचार्य्यविरचितायां व्याड्याचार्य्य प्रणीतजटाद्यष्टविकृतिप्रतिपादकविकृतिवल्लीनाम्नः ग्रन्थस्य टीकायां जटविकृतिलक्षणं नाम प्रथमं पटलं । श्रीकालभैरवाय नमः ।

विवरणम् । ऋग्वेदपारायणं हि द्विविधं भवति प्रकृतिविकृतिभेदात् । तत्र प्रकृति र्नाम संहितैकरूपैव । विकृतिस्तु जटाद्यष्टविधा भवति । ताश्च जटा, माला,

शिखा, लेखा, ध्वजो, दण्डो, रथो, घनः इत्यष्टौ। व्याडिकृतविकृतिवल्लीमध्ये सर्वेषामेवैषां समाग्विवरणमस्ति। व्याख्यातञ्च तत्र गङ्गाधरमहाचार्य्येण विकृति कौमुदी समाख्यया विकृतिवल्लीटीकया। अस्मदालोच्यपुस्तके चैतयोः द्वयोः पुस्तकयो र्जटापटलं नामा समानमस्ति।

---

No. 36.* जटा। Jatá. Substance, country-made paper, 9½ × 4½ inches. Pages, 83. Lines, 9 on a page. Extent, 779 ślokas. Character, Devanágara. Date, not mentioned. Appearance, old. Prose, complete, but a word or two wanting in some pages.

Jatá is one of the eight Vikriti varieties of recitation mentioned in the preceding number. The Jatá is thus described by Vyádi: A learned man acquainted with the Jatá mode of recitation will use it in the following manner: First the *Krama*, then the *Vyutkrama*, and again the *Krama*, *i.e.*, Jatá is the recitation of two consecutive words of a *rich*, first in their proper order (*krama*), then in the reverse order (*Vyutkrama*), and lastly, again in their *krama* order. As, for instance, take the first two consecutive words of the Rigveda अग्निमीळे. First cite the words in the order of the text अग्निमीळे, then in the reverse order ईळे अग्निं, and again in their original order अग्निमीळे. Thus the Jatá recitation of these two words is अग्निमीळे ईळे अग्निं अग्निमीळे, and so of the other words. This is the principal characteristic of the mode. There are some other rules in connection with this, but in a catalogue like this there is no need of mentioning them. In the codex under notice the whole Rigveda is reduced into the Jatá form by an anonymous writer.

Beginning. श्रीगणेशाय नमः। ॐ अग्निं। ईळे। अग्निमीळ ईळे ग्नि मग्निमीळे इत्यादि।

End. अर्थं आर्या य आ पत्या। ८६।

Colophon. अष्टमाष्टके अष्टमोऽध्यायः। श्रीरस्तु पाण्डुरङ्गबड़ेरेन लिखितं स्वार्थं परार्थञ्च।

विवरणम्। जटा नाम विकृतिपञ्चकपाठायणस्यावन्तरभेदविशेषः। जटायाः स्वरूपं लक्षणादिकञ्च व्याडिप्रणीत विकृतिवल्ल्यां सविस्तरं विवृतमस्ति। पुस्तकेऽस्मिन् समुदायस्य ऋग्वेदस्य जटापाठो विद्यते।

**No. 37.** जटाविवृतिः। Jatávivriti. Substance, country-made paper, $8\frac{1}{2} \times 4$ inches. Folia, 8. Lines, 16 on a page. Extent, letters 40 in a line. Character, Devanágara. Date, not mentioned. Appearance, very old, the writing effaced in parts, especially in the last page. Generally correct. Incomplete.

A partial commentary on the above-mentioned work containing the Játa portion only.

**Beginning.** श्रीगणेशाय नमः। कालभैरवाय नमः। यत् प्रसादेन मासन्ते ब्रह्माद्या जगदीश्वराः। यद्ध्यानादिनिवर्त्तन्ते पापाः पुण्यपथादयः १। तं वन्दे जगदानन्दपरमानन्दवर्द्धनम्। नित्यं ज्ञानघनं विष्णुं लोकाधिष्ठानमच्युतं। ग्रन्थे विकृतिवल्ल्याख्ये व्याडिप्रोक्ते पुरातने क्रियते ऽस्माभिर्नाम्ना विवृति कौमुदी।

**End.** अमीदमीदमभ्य १मी १दं। इत्यादुदाहरणानि स्वयमेवोह्यानि

**Colophon.** The same with No 35.

विवरणमुक्तपूर्व्वं।

---

**No. 38.** शुक्लयजुर्व्वेद माध्यन्दिनवाजसनेय संहिता। Sukla Yajurveda Mádhyandina-Vájasaneya-Sañhitá Substance, country-made paper, $9\frac{1}{2} \times 5$ inches. Folia, 250 (of which folium 128 is wanting). Lines, 8 or 9 in a page. Extent, 3,500 ślokas. Character, Nágara Date, Samvat 1705. Appearance, old. Prose and verse. Generally correct Incomplete.

The text of the Mádhyandina Sákhá, White Yajurveda, or Vájasaneya Sañhitá, with accent marks.

The Yajurveda consists of two parts,—the śukla or white, and the krishna or black. Of these, the former is called Vájasaneya Sañhitá, because it was handed over to Yájnavalkya by the Sun in the form of a váji, or horse; and as it was done so at noon, when the sun is white, its name is *śukla*, or white. It has fifteen Sákhás or branches, as Kanwa, Mádhyandina, etc., from the fifteen followers of Yájnavalkya, who first read them. The Sañhitá is divided into 40 adhyáyas. Each adhyáya is subdivided into short sections, called *kandikas*. The first adhyáya contains 31 *kandikas*, the second 34, the third 63, the fourth 37, the fifth 43, the sixth 37, the seventh 48, the eighth 63, the ninth 40, the tenth 34, the eleventh 83, the twelfth 117, the thirteenth 58, the fourteenth 31, the fifteenth 65, the sixteenth 66, the seventeenth 99, the eighteenth 77, the nineteenth 95, the twentieth 90, the twenty-first 61, the twenty-second 34, the twenty-third 65, the twenty-fourth 40, the twenty-fifth 47, the twenty-sixth 26, the twenty-seventh 45, the twenty-eighth 46, the

twenty-ninth 60, the thirtieth 22, the thirty-first 22, the thirty-second 16, the thirty-third 97, the thirty-fourth 58, the thirty-fifth 22, the thirty-sixth 24, the thirty-seventh 21, the thirty-eighth 28, the thirty-ninth 13, the fortieth 17,—altogether 1,975.

The White Yajurveda has been edited in Europe by Dr. Albrecht Weber (Berlin, 1849), and in India by Satyavrata Sámasramí (Calcutta, Sk. 1796).

The following extract from Weber's *Indian Literature* gives a general idea of the contents of this Sañhitá:—"The first 25 adhyáyas contain the formulas for the general sacrificial ceremonial; first, (i, ii) for the new and full moon sacrifice; then (iii) for the morning and evening fire sacrifice, as well as for the sacrifices to be offered every four months, at the commencement of the three seasons; next (iv—viii) for the soma sacrifice in general, and (ix, x) for two modifications of it; next (xi—xviii) for the construction of altars for sacred fires; next (xix—xxi) for the Sautrámani, a ceremony originally appointed to expiate the evil effects of too free indulgence in the soma drink; and lastly, (xxii—xxv) for the horse sacrifice. The last seven of these *adhyáyas* may possibly be regarded as a later addition to the first eighteen. At any rate it is certain that the last fifteen *adhyáyas* which follow them are of later, and possibly, of considerably later, origin. In the Anukramaní of the white Yajus, which bears the name of Kátyáyana, as well as in a Pariśishṭa to it, and subsequently also in Mahidhara's commentary on the Sañhitá, xxvi—xxxv are expressly called a *khila* or supplement, and xxxvi—xl Sukriya, a name above explained.* This statement the commentary on the code of Yájnavalkya (called Mitákshará) modifies to this effect, that the śukriya begins at xxx, 3, and that xxxvi, 1, forms the beginning of an Áranyaka. The first four of these later added *adhyáyas* (xxvi—xxix) contain sacrificial formulas which belong to the ceremonies treated of in the earlier *adhyáyas*, and must be supplied thereto in the proper place. The ten following *adhyáyas* (xxx—xxxix) contain the formulas for entirely new sacrificial

* "For in the Anukramaṇí of the Átreya school these books bear the name Sukriyakánda, because referring to expiatory ceremonies; and this name Sukriya, 'expiating' (probably rather 'illuminating?') belongs also to the corresponding parts of the Sañhitá of the white Yajus, and even to the sámans employed at these particular sacrifices."—Page 104, English Translation. (Trübner & Co)

ceremonies, viz. the purusha-medha (human sacrifice), the pitri-medha (oblation to the manes), and the *pravarga* (purificatory sacrifice). The last *adhyáya*, finally, has no sort of direct reference to the sacrificial ceremonial. It is also regarded as an Upanishad,* and is professedly designed to fix the proper mean between those exclusively engaged in sacrificial acts and those entirely neglecting them."

**Beginning.** ॐ नमः श्रीगणेशाय नमः ॥ ॐ इषे त्वा ऊर्जे त्वा वायवस्थ देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मण आप्यायध्वमघ्न्या इन्द्राय भागं प्रजावतीरनमीवा अयक्ष्मा मा व स्तेन ईशत माघशंसो ध्रुवा अस्मिन्गोपतौ स्यात बह्वीर्यजमानस्य पशून्पाहि ॥१॥

**End.** हिरण्मयेन पात्रेण । सत्यस्यापिहितम्मुखम् ॥—यो सावादित्ये पुरुषः सो सावहम् ॥ ॐ खम्ब्रह्म ॥१॥ (?)

**Colophon.** इति श्रीवाजसनेयी संहितापाठे ।

चत्वारिंशो ऽध्यायः ॥ इति वाजसनेयीसंहिता समाप्तः (?) ॥ नारायण सुतेन शंकरेण लेपि (?)

But in fols. 165-66 (at the end of part I), we find the following :—

इति संहितापाठे विंशो ऽध्यायः ॥ श्रीरस्तु ॥ संवत् १०० ४ वर्षे आषाढमासे शुक्लपक्षे दशमी अनंतर एकादश्यां तिथौ भौमवासरे लिषीतं (?) दीचनूनारायण सुतशङ्करेण लेषी (?) ॥ अघाप (?) ॥ ॥ छक ॥ शुभं भवतु ॥
॥ छ ॥ क ॥ छ ॥ क ॥ क ॥ छ ॥ क ॥ म ॥ थ ।

विवरणम् । महर्षिर्वेदव्यासः खलु कलौ मानवान् क्षीणायुषो ऽवलोक्य वेदान् चतसृषु संहितासु विभज्य तत्रैकैकां संहितामेकैकस्मै शिष्याय ददौ । तथाहि पैलाय बह्वृचाख्यां संहितां, वैशम्पायनाय निगदाख्यं यजुर्गणम्, जैमिनये साम्नां छन्दोगसंहितामथर्वसंहिताञ्च सुमन्तवे प्रददौ । तत्र यजुषो बहुधा लक्षणानि सन्ति, यथा "अनियताक्षरावसानो यजु" रिति केचित्, "गद्यात्मको यजु" रिति श्रीधरः "त्रिगुणं पठ्यमानो मन्त्रब्राह्मणात्मको यजुर्वेद" इत्यन्ये । त्रिगुणञ्च संहितात्वेन, पदत्वेन,

* Other parts, too, of the Vájas S. have in later times been looked upon as Upanishads; for example, the sixteenth book (Sátarudriya), the thirty-first (Purusha-Súkta), the thirty-second (Tádara), and the beginning of the thirty-fourth book (Sivasankalpa).

क्रमत्वेन च। उदात्तादिस्वरभेदेन वा, ऋगादिषु ब्राह्मणांशेष्वपीनास्ति यजुर्वेदे त्वस्तीति भेदः। अयञ्च यजुर्वेदो द्विविधः शुक्लः, कृष्णश्च; तत्र च शुक्लयजुषो वा-जसनेयीत्यभिधानं, कृष्णस्य च तैत्तिरीयइति; तथाचेतिहासः—कदाचित् वैशम्पायनेन स्वबालकवधजनितब्रह्महत्यापापक्षपणार्थं व्रतमाचरितुमादिष्टेषु स्वशिष्येषु याज्ञवल्क्य-नामा कश्चिच्छिष्यः, प्राह। भगवन्नेतेषामल्पसाराणां चरितेनाऽलमहमेव सुदुश्चरं व्रतं चरिष्यामि। ततो गुरुरपि प्रकुपितः प्राह ब्राह्मणावमन्त्रा त्वया नास्ति किमपि मे प्रयोजनं, त्वमस्मदधिगतां विद्यां परित्यज्य गच्छेति। स च शिष्यस्तस्मादधीतं यजुर्गणं तत्रत्या मुनयस्तान् यजुर्गणानवलोक्य तैत्तिररूपमाधाय लोलुपतयाददिरे। ततश्च परित्यागमत्। अथ तत्प्रवर्त्तितशाखानां तैत्तिरीयेत्यभिधानम्।

अथ याज्ञवल्क्योगुरावविद्यमानानि छन्दांस्यधिजिगमिषुः सूर्य्यमाराधयन् तपस्तेपे। ततस्तुष्टोवाजिरूपधरोहरिस्तस्मै मुनये यजूंष्यदात्। तेषाञ्च पञ्चदशशाखाः। यतस्ताः शाखा वाजिरूपेण सूर्य्येण, बालेभ्यः केशरेभ्यः, वाजेन वेगेन वा संस्मारसृताः वाजसनेयीसंज्ञका जाताः। एष च यजुर्गणोनिगदाऽपरपर्य्यायः। तथा मध्याह्ने शुक्लवर्णेन सूर्य्येण दत्तोऽयं गण इति तस्य शुक्लयजुःसंज्ञा च। वाजसनेय्याः पञ्चदशशाखाः यथा, कण्वाः, माध्यन्दिनाः, स्थापनीयाः, कापालाः, पौण्ड्रवत्साः, आवटिका, परमावटिकाः, पाराशर्य्याः, वैधेया, वैनेया, औधेया, गालवा, वैजवापाः, कात्यायनीयाश्चेति। वाजसनेयीसंहितायां नवशताधिकसहस्रं मन्त्राः। सूक्तानि च सूक्तविशेषनाम्नोपलक्षितानि, यथा-शुक्रसूक्तं, रौद्रसूक्तं, सौम्यसूक्तं, कौश्माण्डसूक्तं, जातवेदससूक्तं, सौरसूक्तं, पुरुषसूक्तमित्यादीनि।

संहितायामस्यां चत्वारिंशदध्यायाः सन्ति। तत्राद्येषु पञ्चविंशत्यध्यायेषु सामान्यतो यज्ञविधिर्वर्णितः। तत्राद्याध्याये, द्वितीयाध्यायाष्टाविंशतिकण्डिकासु च दर्शपौर्णमासमन्त्राः। द्वितीयाध्यायान्तिमकण्डिकाषट्के पितृयज्ञमन्त्राः। आधानाग्निहोत्रा-ग्न्युपस्थानचातुर्मास्यमन्त्रास्तृतीयाध्याये प्रोक्ताः। चतुर्थाध्यायमारभ्य अष्टमस्य द्वात्रिंशत् कण्डिकापर्य्यन्तमग्निष्टोममन्त्रास्तत्प्रासङ्गिकमन्त्राश्च उक्ताः। तत्र चतुर्थाध्याये ऋत्विग्यजमानयोः शालाप्रवेशमारभ्य क्रीतसोमस्य शालाप्रवेशपर्य्यन्ताः मन्त्रा उक्ताः। पञ्चमाध्याये सौमिकवेदिप्रधाने आतिथ्येन्द्रौ हविषं इत्यादिमन्त्राः। अग्नीषोमीय पशु प्रधाने षष्ठेऽध्याये यूपसंस्कारमन्त्राः। सप्तमेऽध्याये ग्रहग्रहण-मन्त्राः। अष्टमे तृतीयसवनगता आदित्यग्रहादिमन्त्राः। नवमेऽध्याये वाजपेयराजसूयसम्बन्धि किञ्चिदपि कर्म्मोक्तम्। दशमे अभिषेकार्थजलदानादिराजसूयशेषचरकसौत्रामन्यः उक्ताः। एकादशमारभ्याष्टादशाध्यायपर्य्यन्तमग्निचयनमन्त्राः। तत्र एकादशे उखा-सम्भरणादिमन्त्राः, द्वादशे उखाधारणादिगार्हपत्यचयनचैत्रकर्षणौषधवपनादि मन्त्रा उक्ताः, त्रयोदशे प्रथमा चितिः, चतुर्दशे द्वितीयतृतीयचतुर्थचितिमन्त्रा

उक्ताः, पञ्चदशे पञ्चमचितिमन्त्राः षोडशे शतरुद्रीयाग्निहोममन्त्राः, सप्तदशे चित्यपरिषेकादिमन्त्राः ; अष्टादशे वसोर्धारादिमन्त्राः। एकोनविंशमारभ्य एकविंशाध्यायपर्य्यन्तं सौत्रामणीयागमन्त्राः। द्वाविंशमारभ्य पञ्चविंशाध्यायपर्य्यन्तं चत्वारोऽध्यायाः अश्वमेधमन्त्रोपेताः। अतःपरं खिलान्युक्तानि। तत्र षड्विंशे अनुक्तमन्त्रकथनम्। सप्तविंशोऽध्यायः पञ्चचितिकादिसम्बन्धी। अष्टाविंशः सौत्रामणीसम्बन्धी। एकोनत्रिंशः आश्वमेधिकः। त्रिंशे, एकत्रिंशे च पुरुषमेधोविहितः। द्वात्रिंशत्त्रयस्त्रिंश चतुस्त्रिंशाध्यायेषु सर्व्वमेधमन्त्राः। पञ्चत्रिंशे पितृमेधसम्बन्धिनीमन्त्राः। अतःपरं प्रक्रियाः प्रोक्ताः। शान्तिपाठार्थस्तत्र षट्त्रिंशोऽध्यायः। अथाद्यादि रौहिणान्तः सप्तत्रिंशोऽध्यायः, अष्टात्रिंशेऽध्याये महावीरनिरूपणं। एकोनचत्वारिंशे धर्म्मादिनिष्कृतिनिरूपणं। एतैरेकोनचत्वारिंशदध्यायैः कर्म्मकाण्डो निरूपितः। चत्वारिंशत्तमश्च चरमोऽध्यायः परमात्मनिरूपको ज्ञानकाण्डीयः।

---

**No. 39. J.** यजुर्व्वेद संहिता माध्यन्दिन शाखा। Yajurveda Sañhitá Mádhyandina Sákhá Substance, country-made paper, 10 × 3¾ inches. Folia, 177 (of which 1—6, 63—74, and 82, are wanting) Lines, 8 or 9 in a page. Character, Nágara. Date, not mentioned Appearance old, and the writing in parts much effaced. Correct Incomplete, brought down to the 13th kandika of the 28th *adhyáya*.

**Both the beginning and the end are wanting.**

विवरणम्। यजुर्व्वेदसंहितामाध्यन्दिनशाखाया अष्टाविंशत्यध्यायस्य त्रयोदश कण्डिकावधिर्ग्रन्थः।

---

**No. 40.** यजुर्व्वेदसंहितामाध्यन्दिनशाखा। Yajurveda Sañhitá Mádhyandina Sákhá Substance, country-made yellow paper, 16 × 3½ inches Folia, 180 Lines, 5 or 6 in a page Character, Bengali. Date, not mentioned Appearance, new. Correct. Complete, and with accent marks.

**Beginning.** श्री यजुर्व्वेदाय नमः। माध्यन्दिनशाखा संहिता। ओम्। सत्। सत्। ओं इषेत्वोर्जेत्वा वायवस्थ देवोवः सविता प्रार्पयतु श्रेष्ठतमाय कर्म्मणे।

**End.** हिरण्मयेन पात्रेण। सत्यस्य पिहितं मुखम्। यो सा वादित्ये पुरुषः सो सावहम्॥१७॥ ओम् खम् ब्रह्म।

**Colophon.** इति वाजसनेयसंहितायां दीर्घपाठे चत्वारिंशत्तमोऽध्यायः॥४॥

विवरणम्। यजुर्व्वेदसंहिता माध्यन्दिनशाखा सम्पूर्णा।

**No. 42.** पुरुषसूक्तम्। Purusha Súktam. Substance, foolscap, 6¾ × 4¾ inches. Folia, 5. Lines, 5 to 7 in a page. Extent, 25 ślokas. Character, Nágara. Date, Samvat 1817. Appearance, old. Verse. Generally correct. Complete.

The 31st adhyáya of the Vájasaneya Sañhitá of the Yajurveda, consisting of 22 ṛichs. The first 16 of these richs correspond with the 90th hymn of the 10th Mandala of the Ṛig-Veda Sañhitá. See Mitra's *Bikaner Catalogue*, No. 16, page 10. The manuscript there noticed, however, is the *purusha-súkta* of the Ṛig-Veda.

**Beginning.** श्रीगणेशाय नमः च [ॐ]

पुरुषसूक्त

सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् स भूमिं सर्व्वतः स्पृत्वा अत्यतिष्ठद्दशांगुलं

**End.** श्रीश्चते लक्ष्मीश पत्न्यावहोराचे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तं [व्यात्तम्?]।
इष्णन्निषाणामुं म इषाण सर्व्वलोकं म इषाण ॥ [२२]

**Colophon.** तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः दिवीव चक्षुराततम् ॥ इति पुरुषसूक्तं समाप्तं संवत् १८४० पौषकृष्ण पक्षायां [?] चन्द्रवासरे लिखितं गणेशदत्तमिश्र? शुभमस्तु।

विवरणम्। सूक्तमिदं माध्यन्दिनीयवाजसनेयसंहिताया एकत्रिंशदध्यायरूपम, ऋक्संहिताया दशममण्डलस्य नवतितमसूक्तञ्च। इदं षोडशर्च्चं, तथा परमपुरुषस्य भगवतो नारायणस्य शरीरतः सृष्टिप्रक्रियाविषयकञ्च। अस्य भाषाया अतिसारल्यं तथा भूम्ना लौकिकव्याकरणानुगतत्वञ्चावलोक्य केचिदिदं-माधुनिक-मिति मन्यन्ते।

---

**No. 43.** सर्व्वानुक्रमणी (यजुर्व्वेदीया)। Sarvánukramaní (Yajurvedíyá). Substance, country-made paper, 9¼ × 4 inches Folia, 38, of which 13, 27, and 32 are wanting Lines, 6—8 on a page Extent, 500 slokas Character, Nágara. Date, not mentioned Appearance, old. Prose. Correct. Incomplete.

The Sarvánukramani of the White Yajurveda, attributed to Kátyáyana, gives the ṛishis, deities, and metres of the Yajurveda Sañhitá (with the *khila* and *śukriya* portions).

**Beginning.** श्रीदुण्ढिराजाय नमः। ओम्। मण्डलं दक्षिणमक्षि हृदयं चाधिष्ठितं येन यजूंषि भगवान् याज्ञवल्क्यो यतः प्राप तं विवस्वन्तं पयोमयमश्वक्रममभिधाय माध्यन्दिनीये वाजसनेयके यजुषाम्नाये सर्व्वे सखिले सशुक्रिय ऋषिदैवतच्छन्दांस्यनुक्रमिष्यामः। यजुषामनियताक्षरत्वादेतेषां छन्दो न विद्यते,

**Colophon.** इति माधवीये वेदार्थप्रकाशे यजुःसंहितायां सप्तमकाण्डे तृतीय प्रपाठके विंशोऽनुवाकः ॥ २० ॥ समाप्तः प्रश्नः ॥ श्रीकृष्णार्पणमस्तु ।

विवरणम् । यजुर्व्वेदीयतैत्तिरीयसंहितायाः सप्तमकाण्डस्य भाष्यम् सायणाचार्य-विरचितम् ।

**No. 45.** यजुर्व्वेदविचारः । Yajurveda-bichárah. Substance, country-made paper, 8 × 3¼ inches. Folia, 12. Lines, 11—14 on a page. Extent, on an average 670 slokas. Character, Nágara. Date, not mentioned. Appearance, old. Prose Correct and complete.

Yajurveda bichárah or a treatise on Yajurveda. This work deals with the definition, division, and other particulars relating to the Yajurveda, especially of the Taittiríya Sañhitá.

**Beginning.** श्रीगणेशाय नमः । चत्वारो वेदा विख्याता भवन्ति । ऋग्वेदो यजुर्व्वेदः सामवेदोऽथर्व्ववेदश्चेति । तत्र ऋग्वेदस्याष्टभेदानां शाखाः पञ्च भवन्ति । आश्वलायनी, शांखायनी, शाकला, बाष्कला माण्डूकेयाश्चेति । तत्र शाकलस्य शिष्याः पञ्च—मुद्गलो गोखलो वात्स्यः शालीयः शिशिरस्तथा पञ्चैते शाकलशिष्याः शाखाभेद प्रवर्त्तकाः । तत्र सर्व्वेषां ऋग्विन (न?) त्वात् ऋग्वेदपारा यणाम्नाये शाकल्यमैत्तिरीयकसंहिता पारायणमिति प्रातः (ति?) शाख्य वृत्तिकारसिद्धान्तः । आश्वलायनीय सूत्रमित्यादि प्रकृतानु-पयोगित्वेन न विस्तारेण प्रपंचितम् । यजुर्व्वेदः कीदृश इति विचारस्य प्रकृतत्वात्तदेव विचार्य्यते ।

**End.** अष्टादशचिपञ्चाशत् सहस्राणि शताष्टकं । अष्टपद्याधिके चैव यजु-र्व्वेद प्रमाणकं । काण्ड ७ । प्रश्न ४४ । अनुवाक ६५ पंचाशी (?) २११८ । पदे (?) १०११८० । अक्षरसंख्या ११६८६८ । शाखा वाक्यान्ययुतानि सहस्राणि नवानि च । चतुःशतान्यशीतिश्च अष्टौ वाक्यानि गण्यते ।

विवरणम् । अत्र यजुर्व्वेदस्य पृथक्सत्ताप्रमाणप्रसङ्गेन तस्य लक्षणम्, विभागौ, शाखाभेदाश्च सप्रमाणम् प्रदर्शिताः । उक्तानि च प्रसङ्गतोभिन्नशाखीयानि कानि-चित् कर्म्माणि, पारायणरीतिश्च दर्शिता, दर्शितानि च केषाञ्चिन्मन्त्राणां ऋषिदैवत-च्छन्दांसि । एतन्मते यजुर्व्वेदशब्दोमुख्यतस्तैत्तिरीयकसंहितामेवाभिधत्ते न तु वाजसनेयसंहिताम् । तथा यजुर्व्वेदानुगत पञ्चसूत्रकारेषु आपस्तम्बस्यैव प्राबल्यम् । अन्ततोऽत्र यजुर्व्वेद तैत्तिरीयसंहितायाः काण्डानुवाकाक्षरादीनां संख्या च प्रदर्शिता ।

---

**No. 46.** पूर्व्वार्च्चिकः वा छन्दसी । Purvárchikah or Chhandasí. Substance, country-made paper, 11 × 5 inches Folia, 35 Lines, 7—8

on a page. Extent, 600 ślokas. Character, Nágarí. Date, Samvat 1708. Appearance, old; in parts worm-eaten. Verse. Correct. Complete.

The Saṅhitá text of the first part of the Sáma Veda, called *Purvárchika or Chhanda, Chhandasí, or Chhandasiká*. It is divided into six prapáṭhakas, each of which consists of ten daśatis (दशति), or decades of ten verses each. The last prapáṭhaka contains only nine decades. Some of the decades contain more, and some less, than ten verses. The total number of verses is 585. The manuscript contains the figures (1, 2, 3, &c.) placed above the lines to show how the syllables should be chanted.

**Beginning.** श्री गणेशाय नमः ॥ अग्न आयाहि वीतये गृणानो हव्यदातये निहोता सत्सि बर्हिषि ।

**End.** य ऋषिया अधि या। अचरमनि जिग्ये अहन्न दीतमा अभिजनतजिघ्रे गव्यमश्वं वर्मीव धृष्णवारुज। ॐ वर्मीव धृष्णवारुज

**Colophon.** इतिषष्ठप्रपाठकः ॥ छन्दसि समाप्त (?) ॥ क ॥ ख ॥ यादृशं पुस्तकं दृष्टा (दृष्ट?) तादृशं अपीतं (लिखित?) मया ॥ यदि शुद्धमशुद्धं वा मम दोषो न दीयते। संवत् १७०८ वर्षे माघ सुदि १५ गुरौ अपीतं (लिखितं?) द्विनागग . . . . . . र ॥ ग्रन्थसंख्या ६०० ॥ अस्य ग्रन्थं (?) परिपालनाय श्रीविश्वेश्वरो जयति ॥ श्रीरामचन्द्रो जयति ॥ श्रीअच्युतो जयति। भवानीवीरागमन्त्रकाणस्य इदं पुस्तकं ॥

*N.B.*—Unlike the printed text, the manuscript does not contain the variations of the richs necessary for this adaptation of music.

विवरणम्। अत्र वेदभाष्ये "गीतिषु सामाख्या" गीतिरूपाः मन्त्राः सामानि, इत्यादि वचनैः सामनामा गीतिरूपा मन्त्रा लक्ष्यन्ते। सामशब्दस्तु सामान्यतो गानमात्र एव वर्तते, इन्द्रयज्ञादिमन्त्राय सामविशेषवाचिनः। गीतिर्नाम क्रिया, सा आभ्यन्तरप्रयत्नजन्या, स्वरविशेषाणामभिव्यञ्जिका, सामशब्दाभिलाप्या, नियतप्रमाणा ऋचि गीयते। सा च गीति ऋंगस्तेषु क्रुष्टादिभिः स्वरैः सप्तभिः ऋंगस्वर विकारादिभिश्च निष्पाद्यते, तत्सम्पादनार्थं च अक्षराणि द्वित्राणि विश्लेषो, विकर्षण अभ्यासो, विरामः स्तोभ इत्येवमादयः सर्वे सामवेदे प्रसिद्धाः। क्रुष्टः प्रथमो द्वितीयस्तृतीयश्चतुर्थः पञ्चमः षष्ठ इति .स्वराः . . . . . . . . . . . अग्नस्वरविकारो यथा अग्न आयाहीत्यस्यामृचि . . . . . . . . . . . . . . वोइत्थायाहीति।

पुराकिल सामवेदस्य सहस्रभेदा आसन्। तेषु केऽनध्यायेष्वधीयमाना शक्रेण वज्रेणाभिहताः प्रनष्टा इति श्रूयते। शिष्टानान्तु राणायनीयाद्या नव भेदाः केषाञ्चिन्मते सप्त, तथाहि राणायनीयाः, सात्यमुग्राः कालापाः, महाकालापाः, लाङ्गलाः, कौथुमाः, गौतमाः, जैमिनीयाश्चेति नव, द्वितीये राणायनीयाः सात्यमुग्राः, कल्वियाः, महाकल्वियाः, लाङ्गलाः, शार्दूलाः कौथुमाश्चेति सप्त भेदाः, तत्र कौथुमानां षड् भेदा भवन्ति कौथुमाः, आसुरायणाः वातायनाः, प्राञ्जलिद्वैभृतः, प्राचीन योग्याः, नैगमेया इति। कौथुमादीनामध्ययनं 'अशीतिशतमाग्नेयं पावमानं चतुःशतं, ऐन्द्रन्तु षड्विंशति, तानिसूक्तानि अधीत्य षष्ठतराः (उत्कृष्टतराः) भवन्तीति चरणव्यूहः। तत्र सामवेदीया मन्त्राश्चतुर्धा, ऋक्तन्त्रं, सामतन्त्रं, पञ्चालक्षणं, धातुलक्षणमिति, सामसंख्यातु "अष्टौसामसहस्राणि सामानिच चतुर्दश, अष्टौ शतानि नवतिः विंशतिर्वालखिल्यकम् सरहस्यः ससुपर्णः प्रोक्तस्तत्सामदर्पणः। सारण्यकानि, सौर्य्याणि एतत्सामगणः स्मृतः। अष्टौ सामेति श्लोकेन सामसंख्या ८८४४ मिता ज्ञातव्या। अपि चारण्यकस्थ्येसूक्तसुपर्णप्रैष्य-वालखिल्यानि मिलित्वा नव शतानि।

सामगानात्मकपाठाय द्वौ ग्रन्थौ विद्येते, छन्दः, उत्तरा चेति। तत्र छन्दोनामके ग्रन्थे नानाविधानां साम्नां योनीभूताएवर्चः पठिताः, उत्तराग्रन्थे ऋगात्मकानि सूक्तानि पठितानि। छन्दोग्रन्थः षडध्यायात्मकः, उत्तराग्रन्थस्तु नवाध्यायात्मकः। आरण्यत्यपरपर्य्यायोऽरण्येऽध्येयतयारण्यकभागश्छन्दस्येवान्तर्भूतः। ग्रन्थोऽयमेकाध्यायात्मकएव। एतेषां त्रयाणामार्चिकमिति सामान्यमभिधानमिति। केचित्त्वारण्यकं छन्द उत्तराभ्यां पृथगिति मन्यन्ते।

एतच्छन्दोग्रन्थत्रयमवलम्ब्य रचितानां गेयानां साम्नां चत्वारोग्रन्था विद्यन्ते, तेहि क्रमेण गेया-रण्योह्योह्याभिधाः। तत्र गेयग्रन्थे योनीभूतानामृचां गेयतया सन्निवेशाद् ग्रन्थोऽयं योनिगानेतिनाम्नाऽभिहितो भवति। सायनाचार्य्यस्तु, इममेव ग्रन्थं वेदसामेत्यभिजगाद। वे गानं, गे.गानमिति च तस्यापरं नामद्वयमस्ति। आर्चिकग्रन्थस्य द्वितीयप्रपाठकीयान् मन्त्रानालम्ब्यारण्यकगानग्रन्थोरचितः। तत्र ब्रह्मयज्ञीया मन्त्राः पठ्यन्ते। ऊहोह्य गानग्रन्थौतु स्तोत्रबहुलौ, ; बहुनिर्लोमगुणकथनात्परसैन्यदारकम्। एकं साम द्वयं क्रियते, स्तोत्रियं इति श्रूयते। तत्रविधाविभक्तेषु सामांशेषु एकैकोंऽश एकैकस्याऋचिगातव्यः। ऊहग्रन्थार्थस्तु छन्दःस्थयोरुत्तरस्थयोर्वा गीत्योरूहनमिति।

गीतिहेतूनां स्तोभादीनां सामनिष्पादकत्वं पूर्व्वमुक्तमेव। ततश्च गीतिहेतुषु स्तोभस्यात्यन्तप्रसिद्धत्वात् तल्लक्षणमिदानीं निरूपणीयम्। तच्च सायणेन अधिकत्वेसत्यृग्विलक्षणवर्णः स्तोभ इत्यनेन प्रदर्शितम्। स च स्तोभः पदवाक्यवर्णस्तोभभेदात्त्रि

विध एव। केषाञ्चिन्मते सायणभाष्यलक्षणं वर्णस्तोभपरम्। आयायाहादिभेदेन* पदस्तोभस्य नवविधत्वं श्रूयते, वाक्यस्तोभस्यापि गानादिभेदेन बाहुल्यं दृश्यते। छन्दसीग्रन्थोऽयं षट्प्रपाठकात्मकः, प्रपाठकाश्च प्रत्येकं दशदशतीषु विभक्ताः, दशती च दशर्चात्मिका।

---

**No. 47. J.** सामवेदच्छन्दसी संहिता। Sáma Veda Chhandasí Sañhitá. Substance, country-made yellow paper, 16 × 4 inches. Folia, 11½. Lines, 5 on a page. Extent, 323 *ślokas*. *Character*, Bengali. *Date*, Sak. 1756, Appearance, old. Verse. Complete.

Beginning. श्रीगणेशाय नमः अग्न आयाहि।

End. अभित्वमन्तिपे गव्यमश्व वर्मीव घृष्णवादज। ॐ वर्मीव धृष्णवारुज म्न दशतिः दशतिः। ५९।

Colophon. षष्ठः प्रपाठकः छन्दसी समाप्ता शुभं भवतु। शकाब्दा १७५६, ५ वैशाखे लिपिः समाप्ता।

---

**No. 48.** सामवेदच्छन्दसीपद। Sáma Veda Chhandasí-pada. Substance, country-made paper, 12 × 4 inches. Folia, 57½. Lines, 7 on a page. Extent, about 150 *ślokas*. Character, Nágara. Date, Samvat 1681.* Appearance, old. First two leaves torn and in part worm-eaten. Prose. Correct. Complete.

The Pada text of the first part of the Sáma Veda, called Chhandasí-pada, containing the words of the original richs, arranged in the order in which they occur in the richs, but not combined into sentences.

Beginning. ॐ नमः सामवेदाय। ॐ अग्ने। आयाहि, वीतये, गृणानः। हव्यदातये। हव्यदातये। नि होता। सत् सि। बर्हिषि।

End. अभि। त्वा। नतिपे। गव्यं। अश्वं। वर्मी, इवधृष्णो आरुज ॐ। वर्मीव धृष्णवारुज। ९।

Colophon. षष्ठः (?) प्रपाठकः। इति छन्दसीकापदं संपूर्णं। संवत् १६८१ वर्षे मासे पौष वदि ९ बुधवासरे पंड्या दामोदरेण लिखितं। शुभं भवतु। श्रीपाठीपारवमिदं पुस्तकं। कल्याणमस्तु। ९।

---

* आ३ इति स्तुति संख्यानं, प्रकृत प्रदिदेवत्, ये दशन्येषषेव एहियाद्यानमेव इति।

विवरणम् । अत्र केवलं विभिन्नान्येव संहितापदानि लिखितानि, नतु गानोपयो ग्यस्वरविकारविवरणादिसहितानि ।

---

**No. 49. J.** सामवेद पदपाठः । Sáma Veda Pada Páthah. The pada text of the Sáma Veda. Substance, country-made yellow paper, 16 × 3¼ inches. Folia, 46. Lines, 6—7 on a page. Character, Bengali. Date, Sak. 1756 Appearance, new. Correct Complete.

**Beginning.** ॐ नमः सामवेदाय । छन्दसीपदविच्छेदः । अग्नआयाहि ।

**End.** गव्य । अश्व्य । वर्मी । इव । धृष्णो । आरुज । ॐ । वर्मीवधृष्ण आरुज । ८ । इमति । ४ । १९ । षष्ठः प्रपाठकः । छ ।

**Colophon.** इति छन्दसीयपदच्छेदः समाप्तः । ॐ शाके १७१६ ज्यैष्ठाद्यवधि प्रति पदच्छेदः

---

**No. 50.** सामवेद छान्दसी भाष्यसंहिता । Sáma Veda Chhandasí Bháshya Sañhitá. Substance, country-made paper, 12 × 6 inches. Folia, 114 (really 113 In the manuscript under notice fol 25 has been twice marked as 25 and 26, hence the difference ) Lines, 6—15 on a page. Extent, 4,100 slokas. Character, Nágara Date, Samvat 1767. Appearance, new. Prose and verse. Incorrect. Complete.

The manuscript contains the original text of the first part of the Sáma Veda Sañhitá with the commentary of Mádhabácharya, called Chhandasiká Vibarana. This commentary is quite different from that of Sáyana, which has been already published by Satyabrata Sámasrami under the auspices of the Asiatic Society, Bengal.

**Beginning.** श्रीगणेशायनमः ॐ नमः सूर्याय नमः सामवेदाय नमो विघ्नराजाय नमः सरस्वत्यै । रजोजुषे जन्मनि सत्ववृत्तये स्थितौ प्रजानां प्रलये तमःस्पृशे अजाय सर्गस्थितिनाशहेतवे त्रयीमयाय त्रिगुणात्मने नमः । . षट् विंशत् प्रकारा मन्त्राः प्रैषाः कारणाः, क्रियमाणानुवादिनः स्तोमस्य कर्यानुवचनगताय एते पंच प्रकारा आम्नाताम्नाया भवन्ति । अतो सामम्नायानुग्रन्थे, प्रस्तावत श्रोपहोथः प्रतिहारोपद्रवाख्या निधनं पञ्चमं प्राहुर्हिंकारं प्रणवमेवच । आमा॰ि स्तुतिमंख्यानं प्रलापः परिदेवनं । प्रैष-

**No. 51.** छन्दसिका विवरणम् । Chhandásika Vibaraṇam. Substance, country-made paper, 10 × 3½ inches. Folia, 200 (of which two, viz. 14 and 15, are wanting). Lines, 7 on a page. Character, Nágara Date, not mentioned. Appearance, old. Incorrect. Complete (with the exception of folia 14 and 15).

A commentary by Mádhava on the first part of the Sáma Veda, called Chhandasí.

**Beginning.** ॐ नमः श्रीसूर्य्याय ॐ नमः सामवेदाय, नमः विघ्नराजाय नमः सरस्वत्यै । रजोजुषे इत्यादि ।

**End.** वर्म्मीव वर्म्मे सप्रहनं तद् यस्यास्ति स वर्म्मी, सविता । तस्य सम्बोधनं हे घृणे, (?) धारयत । आरुजा, रुज (भंगे) भंक्ता-धनं गव्यं । आचार्य । मम प्रयच्छेति पारमार्थः ।

**Colophon.** इति छन्दसिकाविवरणं । माधवाचार्य्यकृतं परिसमाप्तं । शुभमस्तु । श्रीभवानीशंकराभ्यां नमः । श्रीकालभैरवाय नमः हरिः ॐ तिं (?) गङ्गाधरसुत गोपीनाथसुतपीताम्बर-पुरुषोत्तम मम नाम परमानन्दपठनार्थे परोपकारार्थे च ।

विवरणम् । माधवाचार्य्य कृतसामवेदपूर्व्वभागभाष्यम् ।

---

**No. 52.** छन्दसिका विवरणम् । Chhandasiká Vibaraṇam. Substance, country-made paper, 8½ × 5½ inches (in book form). Folia, 142. Lines, 19—22 on a page. Extent, 3,500 ślokas Character, Nágara. Date, Samvat 1871. Appearance, old and slightly worm-eaten. Prose. Incorrect. Complete.

A commentary by Mádhava on the first part of the Sáma Veda—the same work as No. 50 or 51.

**Beginning.** श्रीगुरुगणपतिशारदाभ्यो नमः ॐ नमः सामवेदाय रजोजुषे।

**End.** वर्म्मे सप्रहनं तद् यस्यास्ति स वर्म्मी सविता तस्य सम्बोधनं घृणे (?) धारयतः आरुजा रुज भोज भक्ता धनं गव्यं आचार्य च मम प्रयच्छेति परमार्थः ।

**Colophon.** इति छन्दसिका विवरणं माधवाचार्य्यकृतं परिसमाप्तं ९ सँवत् १८७१ भाद्रो शुक्लपदे पंचम्यायां (?) रविवासरे ।

विवरणम्नु क्रपूर्व्वम् ।

---

**No. 53.** उत्तरार्च्चिकः । Uttarárchikah Substance, country-made paper, 9½ × 4½ inches. Folia, 120 Lines, 6 on a page. Extent, 1,200 ślokas. Character, Nagara Date, Samvat 1815. Appearance, old. Verse. Correct. Complete

The Sanhitá text of the second part of the Sáma Veda, called Uttarárchika or Uttara. It is divided into nine *prapáthakas*, each of which is subdivided into two, or occasionally three, sections. Several (usually three) verses are found closely connected with one another, forming an independent group or súkta, the first of them having generally appeared in the first part. (*Vide* Weber's *Indian Literature*, —English Translation, p. 63.)

**Beginning.** श्रीगणेशाय नमः । श्रीसरस्वत्यै नमः । श्रीसामवेदाय नमः । गुरुभ्यो नमः । अं सितोगायत्रीसोमः ॥ उपास्मै गायता नर पवमानायेंदवे । अभिदेवा ॐ इयक्षते । १ ।

**End.** स्वस्तिन इन्द्रो वृद्धश्रवाः स्वस्तिनः पूषा विश्ववेदाः स्वस्तिनस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो वृहस्पतिर्दधातु ॥ ॐ ॥ स्वस्तिनो वृह-स्पतिर्दधातु ॥ ९ ॥

इति नवमः प्रपाठकः समाप्तः ।

**Colophon.** इति उत्तरसंहिता समाप्ता ॥ शुभमस्तु ॥ संवत् १८० । १८१४ वर्ष आषाढ शुद १४ पौर्णमासी बुधवासरे लिखितं गमोड ·चातुर्वेदीज्ञातीयत्रीपाठि पुरुषो (?) आत्मज धनेश्वरसुत अमरे-श्वरपठनार्थं शुभं भूयात् ॥ कल्याणमस्तु ॥ श्रीकाशीविश्वेश्वराय नमः ॥ शुभमस्तु ॥

यादृशं पुस्तकं दृष्ट्वा (?) तादृशं लिखितं मया ।
यदि शुद्धमशुद्धं वा मम दोषो न दीयते ॥

श्रीगङ्गाजी सत्य ॥ ए पुस्तक उत्तरार्चिक त्रिपाठि अमरेश्वर धनेश्वर सु ॥ श्रीमहारुद्राय (?) नमः ॥ श्रीविश्वेश्वराय नमः । विवरणम् । पूर्वेण गतार्थं ।

---

**No. 54.** उत्तरार्चिक । Uttarárchika. Substance, country-made paper, 9 × 4½ inches. Folia, 97, of which nine folia, viz. 8, 10, 50—56, are wanting Lines, 7—8 on a page. Letters, 26 in a line. Character, Nágara. Date, Samvat 1790. Appearance, old. Correct. Incomplete

*The second part of the Sáma Veda called Uttara.*

Beginning. श्रीगणेशाय नमः। श्रीसामवेदाय नमः। उपास्मै गायता नरः पवमानायेंदवे &c.

End. स्वस्तिनो बृहस्पतिर्दधातु ॐ स्वस्तिनो बृहस्पतिर्दधातु ॥ ६ ॥

Colophon. इति नवम प्रपाठकः समाप्तः उत्तरार्चिकःग्रन्थःसमाप्तः ॥
स्वस्ति संवत् १७८० वर्षे वैशाख शुदी ६ वार शुक्रे लिखितं।
आपा पाममध्ये चवाडी श्रीपूरबजी वासुदेवसुतलक्ष्मीनाथ
तथा भाइसुत नाथ तथा भाइ जागेश्वरेन (?) स्वयं लपीतं (?)
भाइकनिष्ठ गोपालजीपठनार्थं परोपकारार्थं। श्री।
भग्नपृष्ठकटिग्रीवा बद्धमुष्टिरधोमुखः।
कष्टेन लिखितं ग्रन्थं यत्नेन परिपालयेत् ॥ १ ॥
राजाघमनो प्रभात मघुरं जीपरणवाने चालमेते सायेचाबो (?)

विवरणम्। उत्तमम्।

---

**No. 55. J.** उत्तरार्चिकः। Uttarárchikah Substance, country-made yellow paper, 16 × 3½ inches. Folia, 65 Lines, 6 on a page. Letters, 52 in a line Character, Bengali. Date, not mentioned. Appearance, new. Correct Complete.

Beginning. श्रीसामवेदाय नमः।

End. स्वस्तिनो बृहस्पतिर्दधातु।

Colophon. इति नवम प्रपाठकः समाप्तः। इत्युत्तरसंहिता समाप्ता।

विवरणम्। उत्तमम्।

---

**No. 56.** सामवेद-संहितोत्तरार्चिक-पदपाठ। Sáma Veda Sañhitottarárchika-padapatha. Substance, country-made paper, 10 × 4½ inches. Folia, 77. Lines, 8 on a page. Letters, 34 in a line Character, Nágara. Date, Samvat 1588. Appearance, very old and decayed; many leaves torn, and the writing in parts effaced. Correct. Complete.

The pada text of the Uttarárchika, or the second part of the Sáma Veda. The folia are numbered from 54, from which it appears that originally the manuscript contained both the parts of the Sañhitá, the first part being contained in folia 1—53, which are now wanting.

Beginning. ॐ नमः * * ॥

उप। अग्नै। गायत। नरः ॥

पवमाना ——— अभि। देवान।

* * ति.

End. स्वस्ति। नः। स्वस्ति। नः। इन्द्रः।

पतिः। दधातु ॥ ॐ। स्वस्तिनोइन्द्रस्वस्तिर्दधातु ॥ ९ ॥ इति

नवमः प्रपाठकः समाप्तः ॥

Colophon. इत्युत्तरपद समाप्तः ॥ स्वस्ति संवत् १४८८ वर्षे चैत्र शुदि (?) ९

नौ मे लिखितं ॥ ·चवेदविशाडि कालूषासुतत्रिवाडीमाधव

पुत्रपौत्राणां पठनार्थं ॥ श्रीः * * शुभं भवतु।

विवरणम्। सामवेदसंहिताया उत्तरार्चिकस्य पदपाठः।

---

**No. 57.** उत्तरार्चिकभाष्यं (वा) उत्तर-भाष्यं। Sáma Veda Sañhitá Uttarárchikabháshyam or Uttarabháshyam (together with the Sañhitá text). *Substance, country-made paper,* 12½ × 6¼ *inches.* Folia, 155. (The page marks are incorrect, Nos. 33 and 36 occurring twice, and the folium following 48 being marked 50 instead of 49). Lines, 14—17 on a page. Extent, 6,000 *ślokas. Date, Samvat* 1873 (?). *Appearance, old.* Prose and verse. Correct. Complete.

The commentary of *Sáyanáchárya* on the Uttarárchika of the Sáma Veda, together with the text of the Sañhitá.

Beginning. श्रीगणेशाय नमः। ॐ श्रीसायणाचार्येभ्यो नमः।

ॐ। वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे।

यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम् ॥

End. इत्येकविंशेऽध्याये प्रथमखण्डः।

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।

पुमर्थांश्चतुरो देयात् (?) विद्यातीर्थमहेश्वरः ॥

Colophon. इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरेण सायणाचार्य्येण विरचिते माधवीये सामवेदार्थ प्रकाशे उत्तरग्रन्थे एकविंशोऽध्यायः सम्पूर्णः । २१ । लिखितं वीरभाषेन—लेखकपाठकयोः शुभं भूयात् । संवत् १८०२ (?) श्रावणे कृष्णे २ ।

विवरणम् । सायणाचार्य्यविरचितं सामवेदस्य उत्तरार्च्चिकभाष्यम् (संहिता पाठसहितम् ।

---

**No. 58.* J.** सामवेदोत्तरार्च्चिकभाष्यम् । Sámavedottarárchhirka-bháshyam. Substance, country-made yellow paper, 10 × 3¾ inches. Folia, 216. Lines, 7—8 on a page. Letters, 62 in a line. Character, Bengali. Date, not mentioned. Appearance, new. Prose. Correct Incomplete (*brought* down to the 3rd *sukta* of the 1st *khanda* of the 17th adhyáya).

Beginning. ॐ नमः सामवेदाय । ॐ नमः कुथुमशाखायै ॥ ॐ नमः उत्तर संहितायै ॥ यस्य निश्वसितं वेदा यो (?) वेदेभ्योऽखिलं जगत् । इत्यादि ।

End. विष्णो ते तव तत प्रसिद्धं विष्णुरिति प्रख्यातं नाम स्वार्थः स्वामी स्तुतिनां हविषां वा । यद्यपि यानि ज्ञातव्यानि सर्व्वं जातानि वद्दान् । जानन् यद्य इव्यं स्वाकानयोग्यं नाम ।

विवरणम् । सायणाचार्य्यं कृत मुत्तरार्च्चिक भाष्यम् संपूर्णम : अत्र पुस्तके निरुक्तस्यापि पत्रचतुष्टयमस्ति ।

This manuscript contains also four folia of Nirukta.

---

**No. 59.** आरण्यक संहिता महानाम्नी । Áranyaka Sañhitá, Mahánámni (These two works, forming portions of the Purvárchika of the Sáma Veda, are found under the same covering )

---

**No. 60.** आरण्यकसंहिता । Áranyaka Sañhitá (or Áranyaka portion of the Purvárchika of the Sáma Veda). Substance, country-made paper, 9¾ × 4½ inches Folia, 5½. Lines, 7 on a page Letters, 24—27 in a line. Character, Nágara. Date, Samvat 1812. Appearance, old. Verse. Correct. Complete.

**Beginning.** ॐ श्रीगणेशाय नमः। श्रीसामवेदाय नमः। इन्द्र ज्येष्ठं न आभर ॐ जिष्ठं पुपुरि श्रवः।

**End.** सखला हरितो रथेव इनिदेव सूर्य्यं मोचिच्छम विचषण १॥ ददाति ॥ ५ ॥

**Colophon.** इति आरण्यकसंहिता समाप्ता।

---

**No. 61.** महानाम्नी। *Mahánámni.* Substance, country-made paper, 9¾ × 4½ inches. Folia, 2. Lines, 7 on a page. Letters, 24—27 in a line. Character, Nágara. Date, Samvat 1812. Appearance, old. Verse. Correct. Complete.

A body of hymns forming the last part of the Purvárchika, coming after the *Áranyaka* portion.

**Beginning.** ॐ विदा मघवन् विदा गातु मह्यं शिषो दिशः।

**End.** एवाहि पृष्ण। एवाहि देवा। ॐ खाहि देवाः ॥ १० ॥

**Colophon.** ॐ महानाम्नी समाप्तं (?)६१। संवत् १८८८ वर्षे मार्गशीर्षे मासे शुक्लपक्षे ११ एकादशी रविवासरे लिखितं गमोद्दचतुर्वेदी त्रिपाठी पुरुषोत्तमात्मज धनेश्वर त्रिपाठि अमरेश्वर पठनार्थं शुभं भवतु। कल्याणमस्तु। श्रीकाशीविश्वेश्वर सत्य ह (?) ॥

---

**Nos. 62, 63, 64, & 65. J.** आरण्यसंहिता पदपाठसंहिता। Aranya Sañhitá with its Pada text. *N.B.*—Under *Aranya Sañhitá* are included the Árchikas of Áranyaka and Mahánámni with their Pada text, which, however, are placed first in order in the manuscripts. Substance, country-made yellow paper, 15¾ × 3½ *inches. Folia, 12. Lines, 5—8 on a page. Extent, about 200* ślokas. Character, Bengali. Date, Sak. 1750. Appearance, new. Verse and prose. Correct. Complete.

*N.B*—In the old catalogue of the library the *Archikas* of Áranyaka and Mahánámni go by the common name of Áranya Sañhitá.

**No. 62.** आरण्यपदपाठः। The Pada text of Áranya Sañhitá.

**Beginning.** ॐ नमः सामवेदाय ॥ ॐ ॥ इन्द्र। ज्येष्ठम्। नः। आ। भर।

**End.** सप्त। त्वा। हरितः। रथे। वहन्ति। देव। सूर्य। शोचिष्केशम्। शोचिः। केशम्। विचक्षण। वि चक्षण। १४ इमति ॥

---

**No. 63.** महानाम्न्यार्चिकपदपाठः। The Pada text of Mahánámni Árchika.

**Beginning.** ॐ विदाः। मघवन्। विदाः। गातुम्। मनु। शंसिषः। दिशः। शिक्ष। श चीनाम्। पते। पूर्व्वीणाम्। पुरुवसो।

**End.** इन्द्र। एव। हि। पूषन्। एव। हि देवाः। ॐ एवाहि देवाः। १०।

**Colophon.** इति आरण्यपदसंहिता समाप्ता। इमति (?)।
षष्ठः प्रपाठकः। शाके भङ्गाङ्गि वार्षिं धरणिगणिते शके वर्षे इषपक्षे भानौ श्रीनन्दनाम्ना हरिहरयतेः (?)।

---

**No. 64.** आरण्यकसंहिता। Áranyaka Sañhitá.

**Beginning.** ॐ नमः सामवेदाय ॥ इन्द्र ज्येष्ठं न आभर १०

**End.** शोचिष्केशं विचक्षण १४। इमति। ५ ॥

---

**No. 65.** महानाम्न्यार्चिक। Mahánámni Árchika.

**Beginning.** विदा मघवन्, विदा गातु १।

**End.** एवाहि देवा। १० ॥ इमति ॥ ६ ॥ षष्ठ प्रपाठकः।

**Colophon.** पूर्णा आरण्यो ॥ ऋतुशरमुनिचन्द्रै सम्मिते शाकवर्ष गतवति मिहिरेऽलिं पञ्चविंशेऽह्नि साम्नः शिरसि कृष्णमशाखां न्यस्य तस्याहितैर्षा च लिखति कमलादिः संहितां कान्तशर्मा।

विवरणम्। पूर्ववत् गतार्थं।

**No. 66.** आरण्योपदपाठः । Áraṇí Pada Páṭhah. The Pada text of *Áraṇí Sañhitá (as of Araṇyaka and Mahánámnyárchika). Substance, country-*made paper, 9¼ × 4 inches. Folia, 14. Lines, 5 on a page. Extent, 110 ślokas. Character, Nágara. Date, Samvat 1763. Appearance, old. Prose. Correct. Complete.

*N.B.*—The manuscripts in question may henceforth be regarded as one.

The Pada text of Áraní Sañhitá.

**Beginning.** ॐ श्रीगणेशाय नमः ॐ इन्द्र । ज्येष्ठं । न । आभर ।

**End.** एवा । हि । देवाः । एवाहि देवा

**Colophon.** कामेश्वरस्येदं पुस्तकं । मूल्यं तु गृहीतं । संवत् १७६३ माघवदि ११ वेचाथीलीघो । The colophon is, however, in a different handwriting.

विषयम् । आरण्येति आरण्यपर्व्वमहानाम्न्यार्च्चिकयोः साधारणी संज्ञा तस्या पदपाठः ।

---

**No. 67.** आरण्योपदपाठः । Áraṇí Pada Páṭhah. The Pada text of Áraní Sañhitá. Substance, country-made paper, 7¾ × 4½ inches. Folia, 6. Lines, 9—11 on a page. Character, Nágara. Date, Samvat 1838. Appearance, old. Correct. Complete.

**Beginning.** ॐ श्रीगणेशाय नमः । श्रीसामवेदाय ॐ इन्द्र । ज्येष्ठम् । नः । आभर ।

**End.** ॐ एवाहि देवा ।

**Colophon.** महानाम्नी पदं समाप्तं संवत् १८३८ कार्त्तिक, सुद ९ सोमवासरे लिखितं मोटचानीय (?) चातुर्व्वेदिन अमरेश्वरसुतदेवेश्वरेण लिखितं ॥ श्री ॥

---

**No. 68.** आरण्यपर्व्वमहानाम्नी भाष्यम् ( मूल सहितम् ) । Áranya Parva Mahánámnibháshyam (together with the text). Substance, country-made paper, 12¼ × 6¼ inches. Folia, 25. Lines, 6—13 on a page. Extent, 700 ślokas. Character, Nágara. Date, not mentioned. Appearance, old. Prose and verse. Incorrect. Complete.

The commentary of Sáyaṇa on the Araṇya Parva and Mahánámni of the Sáma Veda Sañhitá, together with the text. See Satyavrata Sámasrami's edition in the *Bibliotheca Indica*, vol. ii, pp. 243—386.

**Beginning.** श्रीगणेशाय नमः (१) "इन्द्र ज्येष्ठं न आभर ओजिष्ठं पुपुरिश्रवः यद्दिधृक्ष वज्रहस्त (?) रोदसी उभेसुशिप्रपप्राः"

श्रीगणेशाय नमः । आरण्यकाभिधः षष्ठोऽध्यायो व्याख्या क्रियते (व्याक्रियते?) धुना । तत्रेन्द्रेत्यादिकानान्तु षट्पञ्चाशदृचां* क्रमात् । वामदेवस्तुतम्छन्दो बृहतीचित्रवेवच (इत्यादयः) गायत्री (ति) क्रमादिन्द्रो भवेत्तिसृषु देवता । (इत्यन्ता अनुक्रमश्लोकाः अथ भाष्यम्) तत्र प्रथम खण्डे सैषा प्रथमा । ४ । हे इन्द्र (हे "इन्द्र") ज्येष्ठं प्रशस्ततमम् ओजिष्ठं अतिशयेन बलकरं । पुपुरि पूरकं । श्रवोऽन्नं नोऽस्मभ्यमाहर प्रयच्छ । हे वज्रहस्त । वज्रबाहो हे सुशिप्र शोभनहनुक एवंभूतं हे इन्द्र । यद्धनं† दिधृक्षेम धारयितु मिच्छेम । यद्धनं इमे परिदृश्यमाने उभे रोदसी द्यावापृथिव्यौ । आपप्राः आपूरयसि । तदस्माहरे त्यन्वयः । येनेमे चित्रवज्रहस्तेति वक्ष्यमाणानां पाठः

**End.** यद्वा एव मस्मात् सुपां सुलुगिति जश्लोलुक् । अस्मदीयं यज्ञं आगतारा (आगन्तारौ) भवेत्यर्थः भवतेत्यर्थः) ।

**Colophon.** इति महानाम्न्यः प्रकृतितस्तिस्रोविकृतितोनवसंख्यका ऋच । तथा पञ्चपुरीषपदानि यथामति व्याख्यातानि 'इति महानाम्नी समाप्ता'।

विवरणम् । सामवेदसंहितायामारण्यपर्व्वणो महानाम्नीभाष्यम्, सायणाचार्य्य-विरचितम् । सोसाइटी मुद्रित पुस्तके २य खण्डे २४३-३८६ पत्रेषु द्रष्टव्यम् ।

---

**No. 69.** आरण्यगानम् । महानाम्नीसहितं । Araṇyagánam with Mahánámní. Substance, country-made paper, 10 × 4½ inches. Folia, 47. Lines, 8 on a page. Extent, 1,000 ślokas. Character, Nágara. Date, not mentioned. Appearance, old Verse. Correct Complete.

---

* The reading in the *Bibliotheca Indica* edition of the *Sáma Veda Sañhitá* is "पञ्चपञ्चाशतं."

† "धन" in the *Bibliotheca Indica* edition.

A part of the Sañhitá of the Sáma Veda, giving (together with the Vedagána) directions for the modulation of the voice in chanting the Purvárchika or Chhandá portion of the Veda including the Mahánámní.

**Beginning.** श्रीगणेशायनमः। अ'जो वै अपम्' दयां यदे। इता ११ उवा १९। मा १२४ ताम। हां हां ११ उवा १९। ई १२३४ मा। सतस्म मीः। उता ११ उवा १९। सी १२४ युः।

**End.** होव। हो। वाहा ११ उवा १९। ई ३४ डा। आरवा। हि प्रुपा १२३४ न। होर। हो। वाहा ११ उवा १९। ई ३४ डा। आरवा। हि देवा १२३४ः। होर। हो। वाहा ११ उवा १९। ई ३४ डा॥ डा। ९।

**Colophon.** महानाम्नी समाप्त [?].

विवरणम्। सामवेद संहितायां छन्द आर्चिकस्यान्तर्गतायाः महानाम्न्याः संहितायाः अंशस्य स्वरस्तोभादियुक्तगेयग्रन्थविशेषः। अयं हि गानग्रन्थ आरण्यपर्यायपठित इत्यभिमतः।

---

**No. 70.** आरण्यगानम् तथा महानाम्नी। Áranyagánam and Mahánamní. Substance, country-made paper, 10×4½ inches. Folia, 70 (of which the Mahánámní occupies a portion of fol. 68 and folia 69 and 70). Lines, 8 on a page. Extent, 600 ślokas. Character, Nágara. Date, Samvat 1665. Appearance, old and in parts torn. Verse. Correct. Complete.

Noticed in Dr. Rajendralál Mitra's *Notices of Sanscrit Manuscripts*, No. 630, page 210, vol. ii, and *Bikaner Catalogue*, Nos. 7 and 8, pp. 4-5. See also Satyavrata Sámaśrami's elaborate edition of the *Sáma Veda Sañhitá* (published in the *Bibliotheca Indica*), vol. ii, pp. 387—518 (Áranygána) and pp. 366-86 (Mahánámni).

[ श्रीयुक्त राजेन्द्रलाल मित्रप्रणीत ग्रन्थसूच्यां द्वितीय भागे २१० पृ तथा तत्प्रणीत विकानीर ग्रन्थसूच्यां ४—५ पृ द्रष्टव्यानि। तथा च श्रीयुत सत्यव्रत सामश्रमि संस्कृत सोसाइटीमुद्रित सामवेदसंहितायाः द्वितीयभागे पृ ३८७— ५१८ तथा पृ ३६६—३८६ द्रष्टव्यानि।]

Beginning. ॐ नमः सामवेदाय। ॐ ओविरूपं। यद्यथावर्हीहृता १। उवा११ यार १४। ताम् दा दा १।

End. होपि। हो वा दा ११ उवा २१। ई १४ डा। ओ वोम्।

Colophon. इति महानाम्न्यः समाप्ताः। संवत् १६६५ वर्षे छवदि १ गुरौ लिखितम्॥

विवरणमुक्तमेव।

---

**No. 71.** सामवेदारण्यगानविवरणम्। Sámavedáranyagánavibaraṇam Substance, country-made yellow paper, 12 × 5½ inches. Folia, 20. Lines, 11 on a page. Extent, 650 ślokas. Character, Nágara. Date, Samvat 1876. Appearance, new, but some letters are effaced here and there. Prose. Complete.

The manuscript in question is a commentary on the richs found in the Áranyaka portion of the Sáma Veda Purvárchiká.

Beginning. ॐ श्रीगणेशाय नमः ॐ नमः सामवेदाय। वेदाख्यगानव्याख्यानं सम्यगेव कृतं मया। आरण्यगानव्याख्यानं तथैवाप्यभिभाष्यते।१। यथा विरूपः—ऋचः प्रथमं ह।

End. पृषदादित्य त्वमपि रसाज्ज्वप्रदाने साहाय्यं कुर्वतो वरुणानव्यर्णो-भ्यादित्याः सहचारिणः सर्व्वे देवा एव पालयतेत्यर्थः।

Colophon. इति श्रीमद्भयोमाकरकृत आरण्यकप्रपाठके षष्ठः प्रपाठकः मिति भाद्रपद कृष्णमिति पौषप्रज्ञः शुक्रवारे संवत् १८७६ शुभं भवतु कल्याणमस्तु। श्रीरस्तु। शुभमस्त्विति भवतु। श्रीकृष्णः ग्रन्थसंख्या ६५०।

विवरणम्। आरण्यपर्व्वस्थितानां ऋचामेव व्याख्यानम्।

---

**No. 72.** ऊहगानम्। Úhagánam Substance, country-made paper, 8½ × 4 inches. Folia, 415. Lines, 6 on a page. Extent, 4,000 ślokas. Character, Nágara. Date, Samvat 1685 Appearance, old. Verse (gána). Correct. Complete.

